## श्रीप्रबोधके कुछ ग्रन्थों और इनसे सम्बन्धित ग्रन्थोंका संग्रह

### प्रातःस्मरणाष्टकम्

तत्कुञ्जरन्ध्रगतसौरकरच्छटाभिः संभिन्नहेमहरिनीलमनोहरांगम् ।
विस्रस्त केश वसनं लुलितांगरागं प्रातस्तदद्भुतमहं मिथुनं स्मरामि ॥१ ॥
नीत्वा समस्तरजनीरतिजागरेण निद्रायितं मिथ उदारभुजोपगूढम् ।
नाबोधितं स्वसुखभङ्गभिया सखीभिः प्रातस्तदद्भुतमहं मिथुनं स्मरामि ॥२ ॥
प्राणेश मुञ्च शिथिलीकुरु बाहुबन्धं बन्धूकरोचिरुदगादरविन्दबन्धुः ।
इत्थं विभातसमये वृषभानुजायाः श्रुत्वा च वाचमलसं हरिमाश्रितोऽस्मि ॥३ ॥
नाथ प्रभातमभवद्भवदीय गोष्ठे संश्रूयते तुमुलवेणुरवः शिशूनाम् ।
तद्याहियाहि भवनं प्रिय मुञ्च शैय्यां राधागिरेति हरिमुत्थितमाश्रयामि ॥४ ॥
सिन्दूरमुद्रितसुभालमुरोनखाग्रं नीलं निचोलमुपगृह्य बहिर्भवन्तम् ।
कुञ्जालये ललितया परिहास्यमानं स्मेरं हरिं स्मर मनः प्रतिभातकाले ॥५ ॥
प्रातः स्मरामि ललिताद्युपनीतयन्त्रभृङ्गारपूरितसुशीतसुगन्धतोयैः ।
द्वारे निकुञ्जभवनस्य निविश्य नेत्रे प्रक्षालयन्तमतिचारुमुखं स्मरामि ॥६ ॥
प्रातः स्मरामि विगलन्नवबर्हचूडं वक्षःस्फुरत्त्रुटितहारसराभिरामम् ।
अस्माकाम(?)मलसायितघूर्णमानेनेत्राम्बुजं सुरभितं वृषभानुपुत्र्या ॥७ ॥
प्रातः स्मरामि दयितास्तनशातकुम्भकुम्भद्वयीं करयुगेन हृदि प्रणीय ।
उत्तीर्य कामकदनाम्बुनिधिं दुरन्तमानन्दिनं कमपि नागरराजमौलिम् ॥८ ॥
*तद्धाम गौरमिथुनं परिभूष्य गोपीवृन्दैर्वराम्बरविभूषणगन्धमाल्यैः ।
सम्भोज्य किञ्चन समर्प्य सभङ्गपूगं प्रातः श्रये क्वचन कारितमक्षखेलाम् ॥९ ॥*
*दृष्ट्वा निशि स्फुरितरत्नमयप्रदीपे कुञ्जोदरे प्रियतमांगरहस्यलक्ष्मीम् ।
तन्मग्नवद्बहिरसक्तदृशं श्रयेऽहं प्रातर्हरिं नवरतिस्मृतिरोमहर्षः ॥१० ॥*
॥ इति श्रीप्रबोधानन्दसरस्वतीकृतं प्रातःस्मरणाष्टकं सम्पूर्णम् ॥

{*चतुर्थश्लोकगतभावेन गुरुतरविरोधाद् अन्त्यश्लोकद्वयं प्रक्षिप्तं सिद्ध्यति । अत्र तत्कालीनलीलाऽनौचित्यमपि अवधेयमस्ति ।}

### श्रीमद्वृन्दावन-विलास-एकादशकम्

दिव्यस्वर्णसुनीलरत्नसुभगं लीलासनालारुणाम्भोजश्रीमुरलीधरं पृथुलसद्वेणीसुबर्होज्ज्वलम् ।
संवीतोज्ज्वलशोणपीतवसनं कर्दपलीलामयं श्रीवृन्दावनकुञ्ज एव किमपि ज्योतिर्द्वयं सेव्यताम् ॥१ ॥
राधाकृष्णविलासपूर्णसुचमत्कारं महामाधुरीसारस्फारचमत्कृतिं हरिरसोत्कर्षस्य काष्ठां परां ।
दिव्यं स्वाद्यरसैकरम्यसुभगाशेषं न शेषादिभिः सेशैर्गम्यगुणोघपारमनिशं संस्तौमि वृन्दावनम् ॥२ ॥
प्रोदञ्चत्पिकपञ्चमं प्रवलिसद्वंशीसुसंगीतकं शाखाखण्डशिखिण्डताण्डवकलं प्रोल्लासवल्लीद्रुमम् ।
भ्राजन्मञ्जुनिकुञ्जकं खगकुलैश्चित्रं विचित्रं मृगैर्नानादिव्यसरःसरिद्गिरिवरं ध्यायामि वृन्दावनम् ॥३ ॥
वापीकूपतडागकोटिभिरहो दिव्यामृताभिर्युतं दिव्योद्यत्फलपुष्पवाटिकमनन्ताश्चर्यबल्लीद्रुमम् ।
दिव्यानन्तपतन्मृगं वनभुवां शोभाभिरत्यद्भुतं दिव्यानेकनिकुञ्जमञ्जुलसरं ध्यायामि वृन्दावनम् ॥४ ॥
चिरादुपनिषद्गिरामतिविचार्यतात्पर्यकं न लब्धुमिह शक्यते यदनु माधुरीमप्यहो ।
तमप्यनुभवेन्महारसनिधिं यदावासतस्तदेव परमं मम स्फुरतु धाम वृन्दावनम् ॥५ ॥
भुवः स्वच्छाश्चिन्तामणिभिरतिचित्रैर्विरचिताश्चिदानन्दाभासः फलकुसुमपूर्णद्रुमलताः ।
खगश्रेणीसामस्वरकलकलाश्चिद्रससरित्सरांसि श्रीवृन्दावनमनु मनो मे विमृशतु ॥६ ॥
अनन्तरुचिरस्थलं स्फुरदनन्तवल्लीद्रुमं मृगद्विजमनन्तकं दधदनन्तकुञ्जोज्ज्वलम् ।
अनन्तसुसरित्सरोवरमनन्तरत्नाचलं स्मराम्यहमनन्ततद्वयरसेन वृन्दावनम् ॥७ ॥
क्षणाच्छरदुपागमं क्षणत एव वर्षागमं क्षणत्सुरभिवैभवं क्षणत एव चान्यर्तुमत् ।
सदा जनितकौतुकं किमपि राधिकाकृष्णयोः स्मर प्रतिपदोल्लसद्रसमयश्रि वृन्दावनम् ॥८ ॥

प्रेमान्धं पशुपक्षिभूरुहलताकुञ्जाद्रिसत्कन्दरावापीकूपतडागसिन्धुसरसीरत्नस्थलीवेदिभिः ।
कालिन्द्याः पुलिनेन तत्स्थसकलेनाशेषवृन्दावनं राधामाधवरूपमोहितमहं ध्यायामि वृन्दावनम् ॥९ ॥
कैशौराद्भुतरूपभङ्गिमधुरैरङ्गैरनङ्गात्मकं कुर्वद्विश्वमतिप्रमुग्धमुरलीवक्रेण नित्याद्भुतम् ।
सिञ्चत्कोमलकाञ्चनद्रवरुचां वीचीभिराशादृशं प्रेमोत्कण्ठभरेण तद्व्रज मनः श्रीधामवृन्दावनम् ॥१० ॥
प्रेमोक्त्यैव विचिन्त्यतां विलुठनैः सर्वाङ्गमायोज्यतां देहस्याऽस्य समर्पणेन सुदृढप्रेमा समास्थीयताम् ।
राधाजानिरुपास्यतां स्थिरचरप्राणीह सन्तोष्यतां श्रीवृन्दावनमेव सर्वपरमं सर्वात्मना श्रीयताम् ॥११ ॥
* ॥इति श्रीमत्प्रबोधानन्द-सरस्वतीपाद-विरिचितं श्रीमद्वृन्दावनविलासदशकं सम्पूर्णम् ॥*

## श्रीकृष्णाष्टोत्तरशतनामावली

राधिकानागरो राधारसिको राधिकापतिः । श्रीराधारमणो राधाप्राणसर्वस्व शेवधिः ॥१ ॥ राधैकपरमानन्दो राधैकपरमोत्सवः । राधैकपरमप्रेमा राधैकपरमोदयः ॥२ ॥ राधैकपरमप्राणो राधिकापरमेप्सितः । राधैककृतसम्मोहो राधैकव्याकुलीकृतः ॥३ ॥ राधैकरतितृष्णार्तो राधैकसुवशीकृतः । राधाङ्गसङ्गजीवातुः श्रीराधान्यस्तजीवनः ॥४ ॥ राधाकटाक्षनाराचगाढनिर्भिन्नमर्मकः राधाभ्रूकालभुजगीविभ्रमोद्भ्रान्त-चेतनः ॥५ ॥ बाह्यान्तश्चित्तविन्यस्तराधालग्नसमाधिकः । राधाविष्टतयाशेषप्रसुप्तवद्व्यवहारकः ॥६ ॥ राधाध्यानमहावेशवशस्थूलवचोगतिः राधाकामाग्निसन्तप्तो राधाविरहविह्वलः ॥७ ॥ राधिकासङ्गमोपायरचनैकविमर्शकः प्रतिवर्त्म सदा राधापदाङ्कालोकतत्परः ॥८ ॥ राधापदाङ्कसुश्लाघ्यव्रजरेणुविभूषितः राधावासदिगायातपवनस्पर्शनिर्वृतः ॥९ ॥ श्रीराधानुचरीवृन्दसम्मानरसदोद्यतः । श्रीराधादेशविन्यस्तप्रत्यध्वानर्ध्यवस्तुकः ॥१० ॥ राधादासीषु बहुधा कृतदन्ततृणादिकः । राधासख्यर्पितस्वीयमुद्रिकाहारवेणुकः ॥११ ॥ राधाभ्रूभङ्गिमोत्तुङ्गतरानङ्गशरार्दितः ॥ राधाप्रेममहावेशमुग्धचेष्टाप्रलापकः । राधापरीरम्भलोभभ्रमत्सर्वकलेवरः ॥१२ ॥ राधानुरागवात्यैकविघूर्णद्बहिरन्तरः ॥१३ ॥ राधाकाममहाज्वालालग्नोच्चाटसदास्थिरः । राधासोमसुधासिन्धुगाहनैकसदोत्सुकः ॥१४ ॥ राधाकामाग्निसन्दग्धश्यामाङ्गरसवर्षणः । राधाधम्मिल्लसंवादिबर्हिबर्हाविचूडकः ॥१५ ॥ राधाङ्गरुचिकौशेयपरिवीतकटिस्थलः । राधाप्रियारामपुष्परचितस्रग्विभूषणः ॥१६ ॥ राधिकागुण-नामादिवादिवंशीमुखाम्बुजः । राधादृश्यस्पृश्यवृन्दावनमात्रैककेतनः ॥१७ ॥ राधिकापदविक्रीतस्वात्मा राधारतोत्सुकः ॥१८ ॥ सदन्त-तृणकाकूक्तिकृतराधानुवर्तनः । राधाभ्रूभङ्गिचकितो राधाकर्णोत्पलाहतः । राधाकुचालकालम्बी राधालीपरिनिर्तितः(तर्जितः) ॥१९ ॥ राधाहठपरिष्वङ्गी हठाकुलितराधिकः । सगद्गदस्मितोदारराधाभर्त्सनतोषितः ॥२० ॥ राधिकावदनाम्भोजमधुलुब्धमधुव्रतः । राधाभिन्न-स्नेहपूर्णललिताद्यैकगोचरः ॥२१ ॥ राधाविलासकुञ्जान्तश्चित्रप्रसवतल्पकः । राधाविजयसद्वर्त्मास्तीर्णपर्णदलावलिः ॥२२ ॥ राधास्मेरास्य-चन्द्रेक्षास्फीतापाररसाम्बुधिः । परार्धप्राणनीराज्यराधाङ्गच्छविलेशकः ॥२३ ॥ राधिकाचन्द्रिकोज्जृम्भि-पूर्णानन्दाब्धिसम्प्लुतः । राधोपालम्भनोद्धर्षलुप्तसर्वेतिकृत्यकः ॥२४ ॥ धृतपाणिसखीयत्नराधातल्पाप्तिनिर्वृतः । राधाश्लेषमुखाम्भोधिलीनस्वपरभेदधीः ॥२५ ॥ राधाप्रथमसङ्गोरुलज्जाभीभङ्गिजालकः । राधासखीश्लाध्यमानरतिवैदग्ध्यवैभवः ॥२६ ॥ कुञ्जरन्ध्रनिविष्टाक्षिराधालीहर्षवर्षणः । अतिगाढोपगूढाङ्ग-राधाखेदोक्तितोषितः ॥२७ ॥ सगद्गदनिषेधार्थराधावागमृतप्रियः सुवेणीमूलमालम्ब्य कृतराधास्यचुम्बनः ॥२८ ॥ माद्यन्माद्यन् मुहुः पीतराधाधरसुधारसः । वक्षःकपाटसंघृष्टराधाकुचघटीतटः ॥२९ ॥ महागाढाश्लेषखर्वीकृतराधाकुचद्वयः । प्रियाद्वयैकतोत्प्रेक्षिराधाभी-विस्मयप्रदः ॥३० ॥ महासुखचमत्कारसततोत्पुलकाकृतिः । राधासुरतसङ्ग्रामसंरम्भव्यग्रविग्रहः ॥३१ ॥ रदखण्डितकन्दर्प-रणोद्यद्राधिकाधरः । पीनस्तननखाघातक्षुब्धराधोन्मदस्मरः ॥३२ ॥ राधाशिथिलहस्ताब्जरुद्धनीवीमिलत्करः । राधिकाकुचकुम्भावलम्बोत्तीर्णस्मरार्णवः ॥३३ ॥ राधासखीजनास्वाद्यः तदाश्चर्यरसाम्बुधिः । विचित्ररतिवीक्षातिचित्रराधा-विमूर्च्छनः ॥३४ ॥ प्रतिक्षणानन्तगुणोद्यर्धिराधारतिस्पृहः । राधाश्लेषरसावेशमहारोमाञ्चविघ्नधीः ॥३५ ॥ राधिकारतिसम्मर्दरसावेशसमुन्मदः राधारतिरणश्रान्तिस्वेदाम्बुरचिताननः ॥३६ ॥ उरस्थलीनित्यभूषारत्नमञ्जरिराधिकः । राधामुखार्पितस्वीयमुखताम्बूलचर्वितः (वञ्चितः) ॥३७ ॥ राधामुखाबुम्जाकृष्टचर्वितास्वादसम्मदः । राधाक्रीडामृगशिशू राधिकादासयन्त्रकः (दारुयन्त्रिकः) ॥३८ ॥ प्रतिक्षणान्योन्यभूषाकृतराधाङ्गभूषणः । राधाकुचतटीपत्रक्रियाकम्पकराम्बुजः ॥३९ ॥ राधामुखशरच्चन्द्रचकोरायितलोचनः । राधाकुचस्वर्णपद्मकोशबद्धाक्षिषट्पदः ॥४० ॥ राधातदालीसहितोच्छलितकेलि-रसार्णवः । राधिकाभूषितस्वाङ्गशोभेक्षाहर्षफुल्लितः ॥४१ ॥ सुधाकोटिमुधाकारिराधानर्मोक्तिनिर्वृतः । प्रतिक्षणकृताम्रेडराधासुरतभिक्षुकः ॥४२ ॥ राधाकुचतटीशायी स्वोरःशायितराधिकः । उरःस्थलं विना शय्याप्यधिरोपितराधकः ॥४३ ॥ राधामानकलाभीतो राधानुनयकोविदः । राधामानग्राहकाले चाटुकारपरायणः ॥४४ ॥ सखीदृगिङ्गतस्तब्धो (क्षुब्धो) राधामानातिखिन्नधीः । सहासराधिकाश्लेषसुखाम्बुधि-विलीनधीः ॥४५ ॥ अहेतुराधाचकिततत्त्वपारोषणोत्सवः । वृन्दावनश्रीवीक्षार्थकृतराधासहभ्रमः ॥४६ ॥ वंशीरतिग्लहद्यूतजितराधावरोधकः । राधानीवीसुसंस्पृष्टहृदयो राधिकामयः ॥४७ ॥ राधासम्बन्धशून्यानां प्राणानामप्युपेक्षकः । राधासम्बन्धगन्धकतृणकेऽप्यात्मविक्रयी ॥४८ ॥ राधाकेलिकथानन्यधन्यैकसुवशीकृतः । राधारसदसद्धामवृन्दारण्याश्रितात्मदः ॥४९ ॥

**इति श्रीप्रबोधानन्दकृता श्रीकृष्णनामावली सम्पूर्णा ॥**